**॥ श्रीः ॥**

# ॥ शुक्लयजुर्वेदीय समिदाधानप्रयोगः ॥

**(पारस्करगृह्यसूत्रानुसारेण)**

ब्रह्मचारी शुचिर्भूत्वा प्रातः/सायं सन्ध्यामुपास्य समिदाधानं कुर्यात्।

१. **शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।**
**प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥** इति विघ्नेश्वरं तथा गुरुपरम्परां स्मृत्वा,
**द्विराचम्य, त्रिः प्राणानायम्य, सङ्कल्प्य -....... गोत्रः, ......... शर्माऽहं, श्रीभगवत्प्रीत्यर्थं भगवत्कैङ्कर्यरूपं प्रातः/सायं समिदाधानं करिष्ये।**

२. **अग्निस्थापना** - अग्निं प्रज्वाल्य निर्धूमज्वलिताग्निम् आनीय वा, **ॐ अग्नये नमः॥** इति सम्प्रार्थ्य,

३. **परिसमूहनम्** – पाणिनाऽग्निं परिसमूहति- अग्ने सुश्रवः ......... भूयासमिति॥ (पा.गृ.सू. २।४।२॥)
ब्रह्मचारी पाणिना दक्षिणहस्तेन अग्निं परिसमूह्य अधोदत्तैः पञ्चमन्त्रैः प्रतिमन्त्रं शुष्कगोमयखण्डादीन्धनप्रक्षेपेण (शुष्कगोमयखण्डैः समिद्भिः वा) अग्निं सन्धुक्षयेत्।

**१-ॐ अग्ने सुश्रवः सुश्रवसं मा कुरु।**

**२-ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि।**

**३-ॐ एवं माः सुश्रवः सौश्रवसं कुरु।**

**४-ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि।**

**५-ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्।**

४. **अग्निपर्युक्षणम् तथा समिदाधानम्** - प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन्त्समिधमादधाति-अग्नये.... स्वाहेति॥ (पा.गृ.सू. २।४।३॥) एवं द्वितीयां तथा तृतीयाम्॥ (पा.गृ.सू. २।४।४॥)

ततः प्रदक्षिणं यथा भवति (ईशानकोणमारभ्य ईशानकोणपर्यन्तम्) तथा **दक्षिणहस्तगृहितेन उदकेन अग्निं पर्युक्ष्य(परिषिच्य)**, उत्थाय, ऊर्ध्वीभूय, प्राङ्मुखस्तिष्ठन् यथा अग्निः समिध्यते तथा घृताक्तं समिधं प्रक्षिपेत्।

**ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाऽऽचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्व्यन्नादो भूयासꣳ स्वाहा।**

एवमनेनैव मन्त्रेण द्वितीयां तथा तृतीयां घृताक्तं समिधमादध्यात्।

(मन्त्रविकल्पमाह- एषा त इति वा समूच्चयो वा॥ (पा.गृ.सू. २।४।५॥)

**एषा ते अग्ने समिदित्यादि आचप्यासिषीमहीत्यन्तेन वा मन्त्रेण। अथवा अग्नये समिधमित्येषात इति द्वयोर्मन्त्रयोः समिदाधाने समुच्चयः ऐक्यम्। ततश्च मन्त्रद्वयान्ते समित्प्रक्षेपः। इति त्रयो मन्त्रविकल्पाः।**

**एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व। वर्धिषीमहि च वयमा च प्यासिषीमहि। अग्ने वाजजिद् वाजं त्वा ससृवाꣳसं वाजजितꣳसम्मार्ज्मि।** य.वे.सं. २।१४)

५. **परिसमूहनं पर्युक्षणञ्च** - पूर्ववत् परिसमूहनपर्युक्षणे॥(पा.गृ.सू. २।४।६॥)

पूर्ववत् अग्ने सुश्रव इत्यादिभिः पञ्चभिर्मन्त्रैः परिसमूहनं पर्युक्षणमपि पूर्ववत् कुर्यात्।

६. **मुखविमार्जनम्** - पाणी प्रतप्य मुखं विमृष्टे- तनूपा....आपृण॥ २।४।७॥ मेधां.....पुष्करस्रजाविति॥ २।४।८॥)

पाणी हस्तौ अग्नौ तूष्णीं प्रतप्य अधोदत्तैः सप्तभिर्मन्त्रैः प्रतिमन्त्रं पाणिभ्यां ललाटादि चिबुकान्तं मुखविमार्जनं कुर्यात् (प्रोञ्छति)। वाक्यभेदात् च प्रतिवाक्यं पाण्योः (हस्तयोः) प्रतपनं मुखविमार्जनञ्च।

**ॐ तनूपा अग्नेऽसि तन्वं मे पाहि।**

**ॐ आयुर्दा अग्नेऽस्यायुर्मे देहि।**

**ॐ वर्चोदा अग्नेऽसि वर्चो मे देहि।**

**ॐ अग्ने यन्मे तन्वा ऊनं तन्म आपृण।**

**ॐ मेधां मे देवः सविता आदधातु।**

**ॐ मेधां मे देवी सरस्वती आदधातु।**

**ॐ मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ।**

७. **अङ्गालभनम् (सर्वांगस्पर्शः)** - (अङ्गान्यालभ्य जपत्यङ्गानि च म आप्यायन्तां वाक् प्राणश्चक्षुः श्रोत्रं यशो बलमिति त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेꣳसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्। पा.गृ.सू. द्वितीयकाण्डे चतुर्थी कण्डिकान्तम्)

**ॐ अङ्गानि च म आप्यायन्ताम्। - इत्यनेन मन्त्रेण शिरः प्रभृतीनि पादान्तानि अङ्गानि आलभ्य,**

**ॐ वाक् च म आप्यायताम्। - इत्यनेन मुखम् आलभ्य,**

**ॐ प्राणश्च म आप्यायताम्। - इत्यनेन युगपत् नासिके आलभ्य,**

**ॐ चक्षुश्च म आप्यायताम्। - इत्यनेन युगपत् चक्षुषी आलभ्य,**

**ॐ श्रोत्रञ्च म आप्यायताम्। - इत्यनेन यथाक्रमेण दक्षिणकर्णं वामकर्णञ्च आलभ्य,**

**ॐ यशो बलं च म आप्यायताम्। - युगपत् दक्षिणहस्तेन वामबाहुं वामहस्तेन दक्षिणबाहुमालभेत्।**

**अप उपस्पृश्य।**

**ॐ अग्नये नमः॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन। यद्धुतं तु मया देव परिपूर्णं तदस्तु ते॥**

८. **त्र्यायुष्करणम् -** (त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्)

त्र्यायुषमित्येतैश्चतुर्भिर्मन्त्रपादैः अनामिकागृहितेन भस्मना ललाटे, ग्रीवायाम्, दक्षिणे अंसे, हृदये च प्रतिपादं त्र्यायुषाणि कुर्यात्।

यथा-

**ॐ त्र्यायुषं जमदग्नेः। - इति ललाटे**

**ॐ कश्यपस्य त्र्यायुषम्। - इति ग्रीवायाम्**

**ॐ यद्देवेषु त्र्यायुषम्। - इति दक्षिणे अंसे**

**ॐ तन्नो अस्तु त्र्यायुषम्। - इति हृदये**

९. **अभिवादनम् -**

**_______गोत्रो ____________________________इति त्रिः/पञ्च प्रवरः _____________ शर्माऽहं**

**भो३ गुरो! भो३ अग्ने! त्वामभिवादये।**

(उदाहरणार्थम्- वत्सगोत्रो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति पञ्चप्रवरः श्रीजगन्नाथकृपादासः शर्माऽहं- भो३ गुरो! भो३ अग्ने! त्वामभिवादये।)

१०.**विसर्जनम् -**

**गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर। यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन॥**

**भो यज्ञनारायण स्वस्थानं गच्छ शुभे कर्मणि पुनरागमनमस्तु।**

११.**क्षमायापनम् –**

**विसर्गबिन्दु मात्राणि पदपादाक्षराणि च। न्यूनानि चातिरिक्तानि क्षमस्व पुरुषोत्तम॥**

**यदक्षरपदभ्रष्टं मात्राहीनञ्च यद्भवेत्। तत्सर्व क्षम्यतां देव नारायण नमोऽस्तु ते॥**

**कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेस्स्वभावात्।**
**करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि॥**

**अङ्गहीनं क्रियाहीनं विधिहीनं भक्तिहीनं च यद्भवेत्। अस्तु तत्सर्वमच्छिद्रं कृष्ण-कार्ष्ण-प्रसादतः॥**

**यत्किञ्चित् वैगुण्यं जातं तद्दोष प्रशमनाय श्रीकृष्णस्मरणं करोमि।**

**हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे। हरे राम हरे राम राम राम हरे हरे॥**

**॥ ॐ तत्सत् श्रीकृष्णार्पणमस्तु॥**